तस्याध्यायस्य माहात्म्यात्ते सर्वे सद्गतिं ययुः। [*अन्ये पठित्वा जीवाश्च मुक्तिमापुरहो पराम्]

इति श्रीमहापुराणे पाद्म उत्तरखण्डे गीतामाहात्म्ये द्वादशाध्यायमाहात्म्यकथनं नाम
द्व्यशीत्यधिकशततमोऽध्यायः ॥ १८२ ॥ ( १२ )

आदितः श्लोकानां समष्ट्यङ्काः—३००७६

---

अथ त्र्यशीत्यधिकशततमोऽध्यायः ।

---

श्रीदेव्युवाच—

द्वादशाध्यायमाहात्म्यं भवता कथितं मम । ब्रूहि त्रयोदशाध्यायमाहात्म्यमतिसुन्दरम् ॥ १

ईश्वर उवाच—

शृणु त्रयोदशाध्यायमहिमाम्भोनिधिं शिवे । यदाकर्णनमात्रेण परां मुदमवाप्स्यसि ॥ २
अस्ति दक्षिणदिग्भागे तुङ्गभद्रा महानदी । तत्तटे नगरं रम्यं नाम्ना हरिहरं पुरम् ॥ ३
यत्राऽऽस्ते भगवान्देवि देवो हरिहरः स्वयम् । यस्य दर्शनमात्रेण परं कल्याणमाप्यते ॥ ४
तस्मिन्पुरे द्विजन्माऽऽसीद्धरिदीक्षितसंज्ञितः । तपःस्वाध्यायनिरतः श्रोत्रियो वेदपारगः ॥ ५
दुराचारेति तस्याऽऽसीद्भार्या नाम्ना च कर्मणा । न सुष्वाप समं पत्या दुराचारा कदाचन ॥ ६
क्षणमप्यात्मसदने न चाऽऽस्ते स्वैरचारिणी । कण्टकत्वं द्विजद्रौ धयन्ती वामगोरसम् ॥ ७
पतिसंबन्धिनः सर्वांस्तर्जयन्ती पुनः पुनः । विटैः सह सदोन्मत्ता रममाणा निरन्तरम् ॥ ८
कदाचिद्व्याकुलं दृष्ट्वा पुरं पौरैरितस्ततः । संकेतगेहमकरोत्कान्तारे निर्जने स्वयम् ॥ ९
अथ तत्रैव सा धूर्ता रममाणा विटैः सह । निनाय सा बहून्कालान्निजयौवनगर्विता ॥ १०
अथ तस्मिन्पुरे नित्यं निवसन्त्या निरङ्कुशम् । वसन्तकालः समभूत्पराश्रितभुवः सखा ॥ ११
आमूलपल्लवाकीर्णसहकारविकारिणाम् । पिकानां पञ्चमालापैः पुरः संजीवितस्मरः ॥ १२
स्फुरच्चम्पकसौरभ्यहारकैर्मलयानिलैः । मन्दं मन्दं प्रसर्पद्भिरान्दोलितवनद्रुमः ॥ १३
उत्फुल्लमल्लिकामोदमदिरापारणावताम् । अलीनां कलहुंकारैः समन्तादुपशोभितः ॥ १४
प्रसन्नचारुभिः स्मेरैः सरोवरसुगन्धिभिः । सीत्कृन्मरालनिवहैः सरोभिः प्रकटीकृतः ॥ १५
घनच्छायासुखासीनहरिणार्भकधारिभिः । नीरन्ध्रपल्लवैर्नानाशाखिभिः शोभितावनिः ॥ १६
तस्मिन्वसन्तसमये मुदिता साऽभिसारिका । अपश्यज्जगदानन्ददायिनीं चन्द्रिकां निशि ॥ १७
चञ्चच्चकोरचञ्चूग्रपीतपीयूषसीकराम् । द्रवदिन्दुशिलानिर्यत्सुधानिर्झरनिर्भराम् ॥ १८
विकासिकुमुदक्रोडसान्द्रीभूतकरोत्कराम् । उल्लासितपयोराशिकल्लोलालिङ्गिताम्बराम् ॥ १९
मनोभवमहासिंहकुलटाकुलकर्तरीम् । घनान्धकारसंदोहविदारणपटीयसीम् ॥ २०
स्वैरीकृतसतीकारपरार्थहिमगर्भिणीम् । म्लानपङ्कजसंकोचां यूनामानन्ददायिनीम् ॥ २१
चक्रवाकवधूवक्त्रकरुणाक्रोशसाक्षिणीम् । मुक्ताश्रेणी(णीं)व शुद्धांशुप्रभासितदिगन्तराम् ॥ २२
अथ तस्यां प्रभूतायां पूरयन्त्यां दिशो दश । कामान्धाः कामिनो जाताः पथि सार्थविहारिणः
अपश्यन्ती विटं रात्रौ निर्भिद्य भवनार्गलम् । ययौ संकेतभवनं निर्गत्य नगराद्बहिः ॥ २४

---

* इदमर्धं क. ख. ज. ञ. पुस्तकस्थम् ।

---

१ क. ख. ज. ञ. त्रग । २ क. ख. ज. ञ. टाकण्टक । ३ ञ. तशार्त° । ४. तामिनाका° ।

तत्र प्रियतमं कंचित्काममोहितमानसा । अन्वेषयन्ती नाद्राक्षीत्कुञ्जे कुञ्जे तरौ तरौ ॥ २५
आकर्णयन्ती कान्तस्य मन्दालापान्पदे पदे । अभियाति ततः क्रीडन्त्यत्र संचारिनिस्वना ॥ २६
चक्रवाकरवाच्छ्रुत्वा कान्तालापभ्रमादसौ । सरोवराणि सर्वाणि पर्यटन्ती मुहुर्मुहुः ॥ २७
कान्तभ्रान्त्या तरुतले प्रसुप्तान्हरिणाङ्कितान् । प्रबोधयन्ती सोच्छ्वासमागताऽस्मीतिभाषिणी २८
आलिङ्गन्ती वनस्थाणुं जीवितेश्वरशङ्कया । तदाननभ्रमाद्भूयश्चुम्बन्ती विकचाम्बुजम् ॥ २९
तत्र तत्र कृतव्यर्थश्रमाऽदृष्टप्रिया स्वयम् । विललाप वने तस्मिन्मूर्छन्ती विविधोक्तिभिः ॥ ३०

दुराचारोवाच—

हा कान्त हा गुणाक्रान्त हा चैतन्यस्य नायक । हे मनोहरसौभाग्य भाग्यलावण्यशेवधे ॥ ३१
हा पूर्णचन्द्रवदन हा सरोजायतेक्षण । हा कान्त सत्त्वसाहित्य विश्रामार्थसुरद्रुम ॥ ३२
अहो कान्त नवाकीर्णकर्णकुण्डलदीधितिः । नयनानन्दिनिष्यन्दी कुत्र ते मुखचन्द्रमाः ॥ ३३
यदि कोपेन कुत्रापि गुप्तवेषोऽत्र तिष्ठसि । प्रसादयामि त्वां कान्त दत्त्वा प्राणान्प्रियानपि॥ ३४

श्रीशिव उवाच—

इत्युच्चैः सर्वतो दिक्षु विलपन्त्या वियोगतः । तस्याः श्रुत्वा वचः कोऽपि सुप्तो व्याघ्रः प्रबुद्धवान्
कुर्वन्गुरुगुरुध्वानं पश्यन्प्रतिदिशं रुषा । आस्फालयन्नखैर्भूमिं गर्जन्नाकाशगह्वरे ॥ ३६
पृष्ठनिमग्नलाङ्गूलं द्रुतमुत्थाय चाकरोत् । गतो व्याघ्रः समुत्पत्य यत्राऽऽस्ते साऽभिसारिका ३७
अथ साऽपि तमायान्तमालोक्य पतिशङ्कया । निर्जगाम पुरः स्थातुं प्रेमनिर्भरमानसा ॥ ३८
ततस्तस्य नखक्रीडाकृत्वानर्थीकृता सती । जहौ प्रियवपुःशङ्कां श्रुत्वा गर्जितमूर्जितम् ॥ ३९
व्याघ्रोऽपि पातयामास ततो नखशिलीमुखैः । तमुवाचाथ क्रोशन्ती दीनसौहृदया गिरा ॥
तथाविधाऽपि सा नारी भ्रान्तिमुत्सृज्य सत्वरम् ॥ ४०

दुराचारोवाच—

व्याघ्र त्वं तु कुतो हेतोर्मां निहन्तुमिहाऽऽगतः । इदं सर्वं ममाऽऽख्याहि पश्चात्त्वं हन्तुमर्हसि ४१

श्रीशिव उवाच

इति तस्या वचः श्रुत्वा शार्दूलश्चण्डविक्रमः । क्षणं विहाय तद्ग्रासमुवाच प्रहसन्निव ॥ ४२

व्याघ्र उवाच—

मलापहा नदी नाम्ना देशे तिष्ठति दक्षिणे । नगरी मुनिपर्णेति तस्या रोधसि वर्तते ॥ ४३
तत्राऽऽस्ते भगवान्साक्षात्पञ्चलिङ्गो महेश्वरः । तस्यां पुर्यामहं विप्रपुत्रो भूत्वा स्थितस्ततः ॥४४
अयाज्यान्याजयन्नश्नन्नेकोऽतिष्ठं नदीतटे । वेदपाठफलं शश्वद्विक्रीणन्धनकाङ्क्षया ॥ ४५
भिक्षुकानपरान्लोभात्तिरस्कुर्वन्दुरुक्तिभिः । अदेयं द्रविणं गृह्णन्नदत्तमनिशं दिनम् ॥ ४६
छलयन्सकलाल्लोँकानृणग्रहणकौतुकात् । ततः कतिपये काले जरठत्वमुपेयिवान् ॥ ४७
वलीपलितवानन्धः प्रपतन्प्रस्खलद्गतिः । पतद्दन्तोऽभवं भूयः प्रतिग्रहपरायणः ॥ ४८
हस्ते गृहीतदर्भोऽहमगमं तीर्थसंनिधिम् । प्रतिग्रहणलोभेन भ्रमन्पर्वसु पर्वसु ॥ ४९
ततोऽहं शिथिलाङ्गः सन्कांश्चिद्धूर्तवरान्द्विजान् । गतवान्याचितुं भोक्तुं दष्टो मध्ये पदे शुना॥५०

---

१ च. °रे । विस्तारिकुण्डला° । २ क. ख. ज. ञ. °न्ती वाचा गद्गदया सती । त° । ३ क. ख. ज. ञ. °हि यतस्त्वं हन्तुमिच्छसि । ४ झ. ञ. जरठत्व ।

अपतं मूर्छितो भूत्वा ततः क्षितितले क्षणात् । ततोऽहं विगतप्राणो व्याघ्रयोनिमुपागतः ॥ ५१
अत्र तिष्ठामि कान्तारे पूर्वपापमनुस्मरन् । न भक्षयामि धर्मिष्ठान्यतीन्साधुजनान्सतीः ॥ ५२
किंतु पापान्दुराचारानसतीर्भक्षयाम्यहम् । अतोऽसती त्वं तत्त्वेन ममालं कवलायसे ॥ ५३

श्रीशिव उवाच—

इत्युक्त्वा स्वनखैः क्रूरैस्तां विभज्याङ्गखण्डशः । अथ सा भक्षिता तेन पापदेहमुपाश्रिताम् ॥ ५४
यमस्य किंकरा निन्युः सद्यः संयमनीं पुरीम् । यमादेशेन तत्रापि मज्जयामासुराशु ताम् ॥ ५५
विण्मूत्ररक्तपूर्णेषु घोरकुण्डेष्वनेकधा । कल्पकोटिषु जातासु तस्मादादाय तां मुहुः ॥ ५६
रौरवे स्थापयामासुर्मन्वन्तरशतावधि । ततोऽप्याकृष्य तां दीनां रुदतीं सर्वतोमुखीम् ॥ ५७
मुक्तकेशीं भीमगात्रां चिक्षिपुर्दहनानने । एवमाद्यपरां घोरां भुक्त्वा नरकयातनाम् ॥ ५८
इह जाता महापापात्पुनः श्वपचयोनिषु । ततः श्वपचगेहेऽपि वर्धमाना दिने दिने ॥ ५९
पूर्वजन्मवशेनैव तथैवाऽऽसीद्यथा पुरा । कुष्ठरोगक्षयवती नेत्रपीडापरायणा ॥ ६०
ततः कतिपये काले पुनः स्वभवनं ययौ । यत्राऽऽस्ते जंभका देवी शिवस्यान्तःपुरेश्वरी ॥ ६१
तत्रापश्यद्द्विजन्मानं वासुदेवाभिधं शुचिम् । गीतात्रयोदशाध्यायमुद्गिरन्तमनारतम् ॥ ६२
ततस्तच्छ्रवणादेव मुक्ता श्वपचविग्रहात् । दिव्यदेहं समासाद्य जगाम त्रिदशालयम् ॥ ६३

इति श्रीमहापुराणे पाद्मे उत्तरखण्डे गीतामाहात्म्ये त्रयोदशाध्यायमाहात्म्यकथनं नाम
त्र्यशीत्यधिकशततमोऽध्यायः ॥ १८३ ॥ ( १३ )

आदितः श्लोकानां समष्ट्यङ्काः—३००८८

---

अथ चतुरशीत्यधिकशततमोऽध्यायः ।

---

ईश्वर उवाच—

अतः परं प्रवक्ष्यामि भवानि भवमुक्तये । गीताचतुर्दशाध्यायमवधारय सादरम् ॥ १
मेदिन्यां यत्किल स्थूलमस्ति काश्मीरमण्डलम् । राजधानी सरस्वत्या भगवत्या मनोहरा ॥ २
यामधिष्ठाय वाग्देवी ब्रह्मलोकं प्रगच्छति । हंसैः समुह्यमानां तु सावित्रीसहितास्त्रिभः ॥ ३
सरस्वतीपदाम्भोजसेवामाश्रित्य कुङ्कुमैः । यत्र गौरवयन्त्याशा हंसाः पक्षपुटोद्भवैः ॥ ४
निरन्तरतया यत्र नृणां संस्कृतभाषिणाम् । देववर्णमयी भाषा निमेषेणोपलभ्यते ॥ ५
प्रातर्गृहाङ्गणोद्भूतैर्यत्र कुङ्कुमपांसुलैः । सर्वतोरुणितच्छायं शशाङ्करविमण्डलम् ॥ ६
तत्राऽऽसीत्तेजसां राशिः शौर्यवर्मा नरेश्वरः । उद्यदुज्ज्वलबाणाग्रखण्डितारातिमण्डलः ॥ ७
अभूच्च सिंहलद्वीपे राजा सिंहपराक्रमः । नाम्ना विक्रमवेतालः कालानामपि शेवधिः ॥ ८
उभौ पारस्परीं मैत्रीं वर्धयांचक्रतुः क्रमात् । तत्तद्देशसमुत्पन्नैरपूर्वैः प्रचुरोत्करैः ॥ ९
एकदा प्रहितं प्रेम्णा प्रभूतं शौर्यवर्मणा । राजा विक्रमवेतालो विलोक्य शुनकीद्वयम् ॥ १०
मत्तमातङ्गतुरगं मणिभूषणचामरम् । प्रेषयामास मित्राय प्रभूतं शौर्यवर्मणे ॥ ११
एकदा शिबिकारूढं चारुचामरवीजितम् । सुवर्णशृङ्खलारूढं वाद्यडिण्डिमडम्बरम् ॥ १२

---

१ क. ख. ज. झ. °शां भमगा° । २ क. भञया । ख. ज. ञ. जम्भया । च. झ. ढ. जृम्भका । ३ क. ख. ज. ञ. °त्या अस्ति चैत्र स° ।

शुनीयुगलमादाय मृगयाकौतुकोत्सुकः । राजा जगाम बाह्यालीं समं राजकुमारकैः ॥ १३
पणबन्धविधानेन समुपेतं शशामिषम् । तत्र राजकुमाराणां महान्कोलाहलोऽभवत् ॥ १४
ततः समानवयसा केनचिद्राजसूनुना । बहुमूल्यं पणं कृत्वा राजा चिक्रीड कौतुकी ॥ १५
ततोऽवतार्य दोलाया विरुदावलिगर्विताम् । धावतः शशकस्योच्चैः पृष्ठेऽमुञ्चन्नृपः शुनीम् ॥ १६
मुमोच राजपुत्रोऽपि प्रेमपात्रं महाभुजः । विरराम शुनीमुच्चैः संकीर्त्य विरुदावलीम् ॥ १७
अलक्ष्यमाणवेगेऽस्मिञ्शुनीयुगलके भृशम् । धावत्युत्थितमेवाऽऽसीत्पश्यतां सर्वभूभृताम् ॥ १८
पपात गर्ते महति शशकोऽतिश्रमादसौ । पतितोऽपि शुनीवक्त्रो नाभूच्छशकशावकः ॥ १९
ततः शनैः समुत्थाय धावन्नाक्रम्य रोषतः । जगृहे राजशुन्याऽसौ शशकः फेनमुद्गमन् ॥ २०
ततः कथंचिदुत्सृज्य गच्छन्विस्खलयञ्शशः । राजपुत्रशुनक्याऽसौ गृहीतः कंधरातटे ॥ २१
जितमस्माभिरत्यर्थमिति संजल्पतां नृणाम् । कोलाहले शङ्कितायाः शुन्या निर्गतवान्मुखात् २२
ततो दंष्ट्राव्रणश्रोणीश्रवद्भिरधारकः । क्वापि मर्मरभूभागे निलीय स्थितवाञ्शशः ॥ २३
जिघ्रन्त्या राजशुन्याऽसौ भूभागं चतरोषया । दृष्टमात्रः परित्रस्तो हस्तमात्रं ततोऽगमत् ॥ २४
यत्र कर्पूरकदलीकोडव्याप्तद(घर्ष)शीतलः । चोलीकपोलफलकाश्रुचुम्बातिसमीरणः ॥ २५
उद्भिन्नकेतकीकोशरजोमुकुलितेक्षणः । विश्रब्धा हरिणा यत्र छायायां तां परितः स्थिताः ॥ २६
नारिकेलफलैर्यत्र स्वयं निपतितैरधः । अपि चूतफलैः पक्वैस्तृप्ताः शाखामृगा अपि ॥ २७
अपि केसरिणो यत्र खेलन्ति कलभैः समम् । फणिनः कङ्कबर्हेषु निर्विशङ्कं विशन्ति च ॥ २८
यत्राऽऽश्रमान्तरे विप्रो वत्सनामा जितेन्द्रियः । शान्तश्चतुर्दशाध्यायं जपन्नास्ते निरन्तरम् ॥ २९
तत्र तच्छिष्यपादाब्जप्रक्षालनजलैः कृते । कर्दमे न्यपतद्धत्वा जीवशेषो मुहुः श्वसन् ॥ ३०
ततः कर्दमसंस्पर्शमात्रान्निस्तीर्णसंसृतिः । दिव्यं विमानमारुह्य निर्ययौ शशको दिवम् ॥ ३१
ततः शुन्यपि लिप्ताङ्गी स्तोकैः कर्दमबिन्दुभिः । क्षुत्पिपासाविरहिता शुनीरूपं विहाय सा ॥ ३२
ततो दिव्याङ्गनारम्यं गन्धर्वरूपशोभितम् । दिव्यं विमानमारुह्य शुन्यपि त्रिदिवं ययौ ॥ ३३
ततो जहास मेधावी शिष्यो नाम्ना स्वकंधरः । विचार्य विस्मितः पूर्वजन्मवैरस्य कारणम् ३४
राजाऽपि पर्यपृच्छत्तं तत्स्मयस्मेरलोचनः । प्रणम्य परया भक्त्या विनयैकपयोनिधिः ॥ ३५

राजोवाच—

कथां कथय मे विप्र हीनयोनिनिषेविनौ । अज्ञौ यौ जग्मतुः स्वर्गे शुनीशशकशावकौ ॥ ३६

शिष्य उवाच—

वत्सनामा द्विजन्माऽऽस्ते वनेऽस्मिन्नियतेन्द्रियः । चतुर्दशं तु ह्यध्यायं गीतानां सर्वदा जपन् ३७
शिष्योऽहं तस्य भूपाल ब्रह्मविद्याविशारदः । चतुर्दशं तु अध्यायं जपामि प्रत्यहं नृप ॥ ३८
मदीयचरणाम्भोजप्रक्षालनजले लुठन् । शशस्त्रिदिवमापन्नः शुनक्या सह भूपते ॥ ३९

राजोवाच—

हेतुना केन कथय हसितं च द्विजोत्तम । अतः किमपि साकूतं मन्यमानेन सादरम् ॥ ४०

शिष्य उवाच—

महाराष्ट्रे तु नगरं नाम्ना प्रत्युदकं महत् । तत्राऽऽसीद्ब्राह्मणो नाम्ना केशवः कितवाग्रणीः॥ ४१

---

१ क. ख. ज. झ. ञ. °कैः श्रिताः शा° । २ क. ख. ज. झ. ञ. °तः केकिष° ।

विलोभनाऽभवत्तस्य जाया स्वैरविहारिणी । तेन साऽहन्यत क्रोधाद्वैरं संचिन्त्य जन्मनः ॥ ४२
ततः स्त्रीवधपापेन शशकोऽजायत द्विजः । किल्बिषाच्छुनकी साऽपि जाता वै जन्मजन्मनः ४३
पूर्वेण जन्मना वैरमभ्यस्तं विस्मृतं नहि । आसेदिवद्भ्यां बहुधा योन्यन्तरमपि क्वचित् ॥ ४४

श्रीशिव उवाच—

इत्याकलय्य सकलं भूपालः श्रद्धयाऽन्वितः । गीताचतुर्दशाध्यायपाठादाप परां गतिम् ॥ ४५

इति श्रीमहापुराणे पाद्म उत्तरखण्डे गीतामाहात्म्ये चतुर्दशाध्यायमाहात्म्यकथनं नाम
चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥ ( १४ )

आदितः श्लोकानां समष्ट्यङ्काः—४००३३

---

अथ पञ्चाशीत्यधिकशततमोऽध्यायः ।

---

ईश्वर उवाच—

प्रवक्ष्यामि विशालाक्षि तुहिनाचलकन्यके । गीतापञ्चदशाध्यायमाहात्म्यमवधारय ॥ १
कृपाणनरसिंहोऽभून्नाम्ना गौडेषु भूपतिः । यस्यासिधारया संख्ये देवसंघाश्च धिक्कृताः ॥ २
यदीयमत्तमातङ्गदानधाराजलैरिला । निदाघेऽपि च सेहे तां रविसंतापवेदनाम् ॥ ३
संक्रन्दनात्परित्रस्ता यदीयशरणं गताः । रेजिरे करिणो मत्ताश्चलन्तः पर्वता इव ॥ ४
मत्तमातङ्गचीत्कारप्रतिस्वनमिवा(षा)दरात् । यस्य गोपायितुं शैला व्याहरन्ति कृपावनः ॥ ५
यदीयधावत्तुरगखुरसंघातजर्जरम् । नाभूच्चित्रं कथंकारं गतखण्डं धरातलम् ॥ ६
यस्मिन्खड्गहतामित्रे समुद्धरति मेदिनीम् । पुनरुज्जल्पयांचक्रे महाभाष्यं फणीश्वरः ॥ ७
तस्याऽऽसीत्सैन्यपो धीमाञ्शस्त्रशास्त्रकलानिधिः । नाम्ना सरभभेरुण्डः प्रचण्डभुजमण्डलः ॥ ८
भाण्डागारेण तुरगैर्भटैर्वीररसोद्भवैः । समान एव भूभर्तुर्दुर्गैरत्यन्तदुर्गमैः ॥ ९
स कदाचित्स्वयं राज्यं कर्तुं पापो दधे मनः । निहत्य वसुधापालं बलात्साकं कुमारकैः ॥ १०
कर्तुं व्यवस्य दिवसैः स्वल्पैरित्थं चिकीर्षया । साहसिकजनैर्मन्त्रं मन्त्रयित्वा हृदि प्रभुः ॥ ११
विषूचिकामयादाशु परासुः समजायत । कालेनाल्पीयसा प्रेत्य पापात्मा तेन कर्मणा ॥ १२
तेजस्वी तुरगो जातः सिन्धुदेशे कृशोदरः । मूल्येन बहुना क्रीत्वा हयतत्त्वविदा ततः ॥ १३
बहुयत्नवता नीतः केनचिद्वैश्यसूनुना । [*राजाऽपि पौत्रनप्त्राद्यैस्तस्यैव मरणात्परम् ॥ १४
कालेन वृद्धतां प्राप्तः स्वराज्यं चापि पालयन् । स वैश्यसूनुस्तं चाश्वं राज्ञे दातुं समागतः ॥ १५
राज्ञो द्वारस्थितस्तत्र प्रतीक्षंस्तत्समागमम्] । ज्ञातपूर्वोऽपि वैश्योऽसौ प्रतीहारेण दर्शितः ॥ १६
किमर्थं ब्रूहि राज्ञेति पृष्टः स्पष्टमभाषत । देव त्रिजगतीरत्नमिति मत्वा तुरंगमः ॥ १७
मयाऽऽनीयत मौल्येन बहुना साधुलक्षणः । ततोऽवलोक्य वक्त्राणि भूपालः पार्श्ववर्तिनाम् १८
समादिदेश वणिजमश्वोऽत्राऽऽनीयतामिति । शिरांसि धूनयन्नृणामश्वलक्षणवेदिनाम् ॥ १९
शूराणामथ चेतांसि मुहुरुत्साहयन्महान् । अखण्डमेदिनीवेगबहुसंक्रमणार्जितम् ॥ २०

---

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ज. झ. पुस्तकस्थः ।

---

१ म. 'द्भटैः । म' ।

लालाफेनच्छलेनासौ वमञ्शुभ्रतरं यशः । उच्चैःश्रवस्तुलां भेजे गुणसाम्येन तत्त्वतः ॥ २१
विद्रुणवन्नतितेजश्च ह्रियेवाऽऽनतकंधरः । चामरैरिन्दुधवलैर्वीज्यमानो निरन्तरम् ॥ २२
दुग्धाम्भोनिधिकल्लोलैः स्वैः श्वासैरुच्चैःश्रवा इव । नीलातपत्रयुगलघनच्छायातलश्रिया ॥ २३
बिभ्राणो वारिदालीढहिमाद्रिशिखरश्रियम् । मेदिनीमण्डलस्पर्शसंक्रान्तामिव पावकम् ॥ २४
मुहुरुद्धारयन्धुन्वन्बन्धुरं कंधरानटम् । ईरयन्वैरिणः सर्वान्व्याहरन्वै जयश्रियम् ॥ २५
हेषारवेण गुरुणा दिक्षु प्रख्यापयन्यशः । सत्त्वस्य राशिरत्युच्चैर्गतीनामिव शेवधिः ॥ २६
रूपस्य निलयं साक्षाल्लक्षणानां पयोनिधिः । आनीतो वणिजा वाजी राज्ञा च समदृश्यत ॥ २७
बहुधा वर्णितोऽमात्यैरश्वलक्षणवेदिभिः । यथेच्छं वणिजोदीर्णं स्वर्णं दत्त्वा महीपतिः ॥ २८
जग्राह तुरगं वेगादसीमानन्दनिर्भरः । ततोऽश्वपालमाहूय भूपालस्तं निरूप्य च ॥ २९
विसर्जितसभालोको गृहान्तमगमन्नृपः । अनेकधा समापृष्टो महीपालरणाङ्गणे ॥ ३०
शस्त्रव्रणकिणश्रेणीभूषणं सत्त्वसंनिभम् । एकदा मृगयां खेल(कुर्व)न्कुतूहलैरसोन्मनाः[१] ॥ ३१
तमारुह्य महीपालो वनं प्रति विवेश ह । विसृज्य सैनिकान्पृष्ठे धावतः परितोऽखिलान् ॥ ३२
आकृष्यमाणो हरिणैः पिपासाकुलितोऽभवत् । तत उत्तीर्य तुरगाज्जलमन्वेषयन्नृपः ॥ ३३
बद्ध्वाऽश्वं तरुशाखायामारुरोह शिलातलम् । गीतापञ्चदशाध्यायश्लोकार्धं लिखितं नृपः ॥ ३४
पातितं मरुता तत्र पत्रखण्डं व्यलोकयत् । पत्रं वाचयतो राज्ञः श्रुत्वा गीताक्षरावलीम् ॥ ३५
ततो मुक्तिपदं लेभे तुरंगस्त्वरयाऽपतत् । ततो ग्रन्थिं समाच्छिद्य पल्याणमवतार्य च ॥ ३६
उत्थाप्यमानस्तुरगो राज्ञा नोत्थितवान्भुवः । कशाघातैर्बहुविधं ताडितोऽपि जडीकृतः ॥ ३७
ततः सरभसं रुण्डो नृपमानस्य सत्वरम्[२] । दिव्यं विमानमारुह्य जगाम त्रिदशालयम् ॥ ३८
ततो गिरिं समारुह्य ददर्शाऽऽश्रममुत्तमम् । पुंनागकदलीचूतनालिकेरसमन्वितम् ॥ ३९
द्राक्षेक्षुवाटिकापूगनागकेशरचम्पकम् । खेलत्कलभमारङ्गं नृत्यत्केकिकुलं नृपः ॥ ४०
प्रणिपत्य द्विजन्मानमुटजाभ्यन्तरस्थितम् । पप्रच्छ परया भक्त्या मुक्तसंसारवासनम् ॥ ४१

राजोवाच—

तुरगो निरगात्स्वर्गं हेतुना केन मे वद ॥ ४२

श्रीशिव उवाच—

इत्याकर्ण्य वचो राज्ञो द्विजन्मा वाचमूचिवान् । त्रिकालदर्शी मन्त्रज्ञो विष्णुशर्मा महत्तरः ॥ ४३

द्विजन्मोवाच—

आसीत्सेनापतिः पूर्वं भेरुण्डस्तव भूपते । त्वां निहत्य समं पुत्रैः कर्तुं राज्यं समुद्यतः ॥ ४४
तावद्विषूचिकारोगात्कालधर्ममवाप सः । कालेन बहुना प्रेत्य तत्पापात्तुरगोऽभवत् ॥ ४५
अथ पञ्चदशाध्यायश्लोकार्धं लिखितं क्वचित् । [*मच्छिष्येण मुदा क्वापि गतेन वनमध्यतः ] ॥
त्वत्तो वाचयतः श्रुत्वा निरगात्तुरगो दिवम् । अनेकजन्मपापौघान्मुक्तो जन्मकृतादसौ ॥ ४७

श्रीशिव उवाच—

[+ततः समागतैस्तत्र परिवारजनैर्वृतः ] । प्रणिपत्य द्विजन्मानं हृष्टो राजा विनिर्गतः ॥ ४८

* इदमर्धं ढ. पुस्तकस्थम् । + इदमर्धं क. ख. च. ज. झ. ढ. पुस्तकस्थम् ।

१ क. ख. ज. झ. °लवशात्मना । त° । २ क. ख. ज. °रबन्धन° ।

पत्रं तदेव लिखितं गीतापञ्चदशाक्षरम् । वाचयन्स महीपालो हर्षसंफुल्ललोचनः ॥ ४९
अभिषिच्य निजं पुत्रं मन्त्रविन्मन्त्रिभिः समम् । सिंहासने सिंहबलं मुक्तिमाप विशुद्धधीः ॥ ५०

इति श्रीमहापुराणे पाद्म उत्तरखण्डे गीतामाहात्म्ये पञ्चदशाध्यायमाहात्म्यवर्णनं नाम पञ्चाशीत्यधिकशततमोऽध्यायः ॥ १८५ ॥ ( १५ )

आदितः श्लोकानां समष्ट्यङ्काः—४००८३

---

अथ षडशीत्यधिकशततमोऽध्यायः

---

ईश्वर उवाच—

अतः परं प्रवक्ष्यामि षोडशाध्यायगौरवम् । आकर्णय कुरङ्गाक्षि हर्षोत्कण्ठप्रवर्षिणि ॥ १
अस्ति सौराष्ट्रकं नाम्ना पुरं गुर्जरमण्डले । तत्राऽऽसीत्खड्गबाहुश्च राजा चन्द्र इवापरः ॥ २
यदीयकुसुमासारे मालासुरभितोदरे । वारांनिधौ हरिः स्वास्थ्यादशेत सह पद्मया ॥ ३
यदीयकीर्तिकर्पूरकणा भान्ति नभोङ्गणे । कीर्णा वैरिकृतश्वासमारुतैस्तारकाछलात् ॥ ४
यस्यासिधारातीर्थेषु स्नाता वैरिगणा भृशम् । नाऽऽवर्तन्ते दिवोऽद्यापि स्वर्गस्त्रीवारविमोहिताः ॥
तस्यारिमर्दनो नाम मदहस्ती मदोद्धतः । मदाम्बुधारासलिलगुञ्जद्भ्रमरमण्डलः ॥ ६
कपोलफलकोत्तीर्णमदधाराजलानिलः । बभौ यो निर्झरोद्गार्यञ्जनाद्रिरिवोच्चकैः ॥ ७
यस्याङ्गेषु व्यराजन्त चामराश्चन्द्रिकोज्ज्वलाः । किरणा इव शीतांशोः पतिताः काननोदरे ॥ ८
सिन्दूरपांसुपटले राजत्कुम्भस्थलो बभौ । यः सन्ध्यावारिदव्याप्तं वियत्खण्डमिव स्फुरन् ॥ ९
कदाचिन्मोचयित्वा तु शृङ्खलानिगडानपि । भङ्क्त्वा लोहदृढं स्तम्भं प्रमत्तो निशि निर्गतः १०
आधोरणगणान्सर्वान्पार्ष्णिविस्फुरदङ्कुशान् । क्रोधादवगणय्यैव निजशालां बभञ्ज सः ॥ ११
तीक्ष्णाङ्कुशमुखैर्विष्वग्घन्यमानोऽपि वैणवैः । दण्डैस्तु त्रासयामासुः (मापन्नाः सादिनो न मनागपि (रगजः) ॥ १२
ततो राजा समालोक्य निशम्येदं कुतूहलम् । तत्र हस्तिकलाभिज्ञैः समं राजकुमारकैः ॥ १३
अदृश्यत समागत्य राज्ञा दन्तावलो बली । सोदयमुद्भटाटोपो हताट्टालिकमालिकम् ॥ १४
ददृशुस्तं महाभीमं पौरा दूरतरं स्थिताः । गोपायन्तः शिशून्भीत्या निवृत्तान्यकुतूहलाः ॥ १५
रुद्धेषु तत्र मार्गेषु पलायनपरैर्जनैः । वासितेषु तदीयोग्रदानधाराम्बुसीकरैः ॥ १६
स्नात्वा तेनाध्वना यातः सरसः कश्चन द्विजः । गीतानां षोडशाध्यायश्लोकान्कतिपयाञ्जपन् ॥
निषिध्यमानो बहुधा पौरैराधोरणैरपि । अमन्यमानः करिणो भीतो न स्खलितस्ततः ॥ १८
स्फूत्कारेण आवृण्वञ्जनान्विपरिमर्दयन् । स्पृशन्दानाम्बुजम्बालमायुष्मान्निर्गतो द्विजः ॥ १९
ततो महानभूत्तत्र विस्मयो वागगोचरः । मानसे भूमिपालस्य पौराणामपि पश्यताम् ॥ २०
समाहूय ततो राजा फुल्लराजीवलोचनः । तमपृच्छद्द्विजं वाहादवतीर्य प्रणम्य च ॥ २१

राजोवाच—

अलौकिकमिदं विप्र त्वयाऽद्याऽऽचरितं महत् । कृतान्तकल्पादेतस्माद्यस्मान्निर्गतवान्गजात् २२

---

१ ङ. झ. सौद्धहुगवा° । झ °मोक्षोत्तिवा । २ क. ख. ज. ञ. °जा चन्द्र । ३ अ. मामोदमा । ४ च. झ °कोद्भूतम° । ५ क. ख. ज. ञ. स्तु ताडया° । ६ झ ञ °तः । स्यन° ।

कमर्चयसि गीर्वाणं कं मन्त्रं जपसि प्रभो । का च सिद्धिस्तवास्तीति द्विजन्मन्समुदीरय ॥ २३

द्विज उवाच —

गीतानां षोडशाध्यायश्लोकान्कतिपयानहम् । जपामि प्रत्यहं भूप तेनैताः सर्वसिद्धयः ॥ २४

श्रीशिव उवाच—

ततो विहाय द्विरदकौतूहलरसं नृपः । आजगाम द्विजन्मानमादाय निजमन्दिरम् ॥ २५

शुभं मुहूर्तमन्वीक्ष्य तोषयित्वा द्विजोत्तमम् । सुवर्णलक्षसंख्याकैर्गीतामन्त्रमुपाददे ॥ २६

गीतानां षोडशाध्यायश्लोकान्कतिपयानपि । समभ्यस्य ततो राजा गजमोक्षणकौतुकी ॥ २७

अथैकदा विनिर्गत्य वाह्याल्यां सह सैनिकैः । तमेवामोचयद्राजा मत्तमाधोरणैर्गजम् ॥ २८

विस्मरन्भीतिवाक्यानि राज्यसौख्यममानयन । तृणवज्जीवितं राजा गजस्याग्रेऽविशत्ततः ॥ २९

आदाय गण्डफलकं मदपङ्किनिरङ्कुशम् । आययौ मन्त्रविश्वासान्नृपः साहसिकाग्रणीः ॥ ३०

राहोरिव मुखादिन्दुः कालास्यादिव धार्मिकः । साधुः खलस्य वदनान्नृपो निरगमद्गजात् ॥ ३१

आगत्य नगरं राजा त्वभिषिच्य कुमारकम् । गीतानां षोडशाध्यायादवाप परमां गतिम् ॥ ३२

इति श्रीमहापुराणे पाद्म उत्तरखण्डे गीतामाहात्म्ये षोडशाध्यायमाहात्म्यवर्णनं नाम षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥ ( १६ )

आदितः श्लोकानां समष्ट्यङ्काः—४०११८

अथ सप्ताशीत्यधिकशततमोऽध्यायः ।

ईश्वर उवाच—

षोडशाध्यायसामर्थ्यं कथितं शृणु सांप्रतम् । स्पष्टं सप्तदशाध्यायमहिमाम्भोनिधिं शिवे ॥ १

खड्गबाहोः सुतस्यैव भृत्यो दुःशासनोऽभवत् । तं गजं धर्तुमागम्य गजात्प्राप्तो यमक्षयम् ॥ २

तद्वासनानिबद्धात्मा गजयोनिमवाप्य च । गीतासप्तदशाध्यायं श्रुत्वा प्राप्तः परं पदम् ॥ ३

श्रीदेव्युवाच —

दुःशासनो गजत्वं च प्राप्य मुक्त इति श्रुतम् । तदेव वद कल्याण विस्तरेण मम प्रभो ॥ ४

ईश्वर उवाच—

स्थितः कश्चन दुर्मेधा माण्डलिककुमारकैः । बहुमूल्यं पणं कृत्वा गजमारूढवांस्ततः ॥ ५

गत्वा कतिपयान्येव पदानि जनवारितः । नाम्ना दुःशासनो मूढः प्रौढवाक्यमुदी(दै)रयन्(त्) ६

ततो निशम्य तद्वाक्यं क्रोधान्धः सिन्धुरोऽभवत् । न्यपतच्च स्खलत्पादः कम्प्यमानः कुमारकैः ॥ ७

ततो निपतितं किंचिदुच्छ्वसन्तं गजो रुषा । ऊर्ध्वमुन्मूलयांचक्रे कृतान्तकनिरङ्कुशः ॥ ८

गतासोरपि रोषेण तस्यास्थीनां (स्थ्नां च) गणं गजः । विकीर्णवान्पृथक्कृत्वा मत्तो दन्तावलस्ततः

ततः कालेन संप्रेत्य गजयोनिमवाप्य सः । महान्तं कालमनयत्सिंहलद्वीपभूपतेः ॥ १०

मैत्री गरीयसी सार्धं खड्गबाहुमहीभुजा । ततोऽसौ जलमार्गेण प्रापितः स तु वारणः ॥ ११

जयदेवेन खड्गबाहोः प्रीत्या नीतो महीभुजा । जातिं स्मरन्स्वकीयां स पश्यन्बन्धून्सहोदरान् १२

दुःखेन महता स्तोकान्दिवसानत्यवाहयत् । राजा कदाचित्संतुष्टः समस्याश्लोकपूरणैः ॥ १३

१ अ. °यमाहात्म्यं क° । २ अ. °ल्याणं वि° ।

कस्मैचित्कवये प्रादात्तमुपायनहस्तिनम् । शतेन तेन कविना रोगोपद्रवभीरुणा ॥ १४
मालवक्षोणिपालस्य विक्रीतश्चैत्यकुंजरः । कियत्यपि गते काले पाल्यमानोऽपि यत्नतः ॥ १५
मुमूर्षुरभवत्तत्र कुंजरो दुर्जरज्वरः । न जिघ्रति पयः शीतं नाऽऽदत्ते कवलं गजः ॥ १६
स्वपित्यपि न सौख्येन मुञ्चत्यश्रूणि केवलम् । दिवा नक्तं स्थाणुवच्च तिष्ठति भ्रष्टचेतनः ॥ १७
इत्थं तैर्हस्तिपैर्दृष्टो दुर्व्यवस्थो गजाधिपः । सत्वरं कथयामास राज्ञे गजहिताय ते ॥ १८

हस्तिपा ऊचुः—

महीपाल न जानीमो गजस्तेऽस्वस्थमानसः । न खादति न पिबति न स्वपित्यपि वै पुरा(तथा)
स्वकरेण रजो भूमेर्न स्वपृष्ठे निषिञ्चति । अश्रुपातं बहुविधं करोति दृश्यतामिति ॥ २०

श्रीशिव उवाच—

[*तच्छ्रुत्वा तस्य वृत्तान्तं राजा द्रष्टुमगात्स्वयम् । मन्त्रिभिर्भिषजे दक्षैर्गजरोगकवेदिभिः] ॥२१
ततो हस्तिपकाख्यातं वृत्तान्तमवनीपतिः । आकर्ण्य स समायातो यत्राऽऽस्ते ज्वरितो गजः॥२२
स चाऽऽलोक्य च भूपालं जगद्विस्मयकारिणीम् । वाचमूचे गजः सम्यग्विसृष्टज्वरवेदनः ॥२३

गज उवाच—

राजन्नशेषशास्त्रज्ञ राजनीतिपयोनिधे । निर्जितारातिसंघात मुरारिचरणप्रिय ॥ २४
किमौषधैरलं वैद्यैः किं दानैः किंतु जापकैः । गीतासप्तदशाध्यायजापकं द्विजमानय ॥
तेनायं मामको रोगः शाम्यत्यत्र न संशयः ॥ २५

श्रीशिव उवाच—

यथाऽऽदिष्टं गजेनाऽऽदौ तथा चक्रे नराधिपः । ततो गजत्वमुत्सृज्य मुक्तो दुःशासनोऽभवत् ॥
[+तेन विप्रेणाभिमन्त्र्य जले क्षिप्ते तदुत्तमे] । अथ दिव्यं समारूढं विमानमवनीपतिः ॥
तं दुःशासनमद्राक्षीत्पाकशासनतेजसम् ॥ २७

राजोवाच—

किंजातीयः किमात्मा त्वं किंवृत्त इति मे वद । केन वा कर्मणा जातो गजः कथमिहाऽऽगतः ॥

श्रीशिव उवाच—

पृष्टो राज्ञा विमुक्तोऽसौ विमानस्थः स्थिराक्षरम् । वृत्तं यथावदाचख्यौ निजं दुःशासनः क्रमात्
गीतासप्तदशाध्यायं जपन्मालवभूपतिः । नरवर्योऽभवन्मुक्तः कालेनाल्पीयसा ततः ॥ ३०

इति श्रीमहापुराणे पाद्म उत्तरखण्डे गीतामाहात्म्ये सप्तदशाध्यायमाहात्म्यवर्णनं नाम
सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥ ( १७ )

आदितः श्लोकानां समष्ट्यङ्काः—४०१४५

---

अथाष्टाशीत्यधिकशततमोऽध्यायः ।

---

श्रीपार्वत्युवाच—

उक्तं सप्तदशाध्यायगौरवं भवता शिव । स त्वमष्टादशाध्यायमहिमानमुदीरय ॥ १

---

* अयं श्लोकः केषुचित्पुस्तकेषु नास्ति । अनपेक्षितश्च । + इदमर्धं क. ख. ज. म. पुस्तकस्थम् ।

ईश्वर उवाच—

आकर्णय चिदानन्दनिष्यन्दि निगमोत्तमम् । पुण्यमष्टादशाध्यायमाहात्म्यं गिरिनन्दिनि ॥ २
समस्तशास्त्रसर्वस्वं श्रोत्रपात्ररसायनम् । संसारयातनाजालविदारणपरायणम् ॥ ३
परं रहस्यं सिद्धानामविद्योन्मूलनक्षमम् । चैतन्यं कैटभारातेरग्रगण्यं परं पदम् ॥ ४
विवेकवल्लरीमूलं कामक्रोधमदापहम् । पुरंदरादिगीर्वाणचित्तविश्राममन्दिरम् ॥ ५
सनकादिमहायोगिमनोरञ्जनकारणम् । पाठमात्रपराभूतकालकिंकरगर्जितम् ॥ ६
अष्टोत्तरशतव्याधिमूलोन्मूलनकारकम् । नातः परतरं किंचिद्रहस्यं हंसगामिनि ॥ ७
तापित्रयपहरं महापातकनाशनम् । +यथा दिवौकसां शक्रो गुरुः शक्राद्यथा वरः ॥ ८
यथा रसानां पीयूषमुत्तमं विश्वविश्रुतम् । यथा गिरीणां कैलासो यथा चन्द्रो दिवौकसाम् ॥ ९
तीर्थानां पुष्करं तीर्थं यथा पुष्पेषु पङ्कजम् । पतिव्रतासु नारीषु यथा लोकेष्वरुन्धती ॥ १०
यथा मखेष्वश्वमेधो यथोद्यानेषु नन्दनम् । यथा रुद्रेषु सर्वेषु वीरभद्रो ममानुगः ॥ ११
[*यथा कालेष्वहं नित्यो यथा पशुषु कामधुक् । यथा व्यासो मुनीन्द्रेषु व्यासेषु ब्रह्मवित्तमः]
यथा दानेषु भूदानं यथा सिन्धुषु गौतमी । यथा लोके हरिक्षेत्रं प्रशस्तं धर्मकर्मसु ॥ १३
यथा लक्ष्मीपतेर्जन्मस्थानं मधुवनं स्मृतम् । सर्वतीर्थेषु यत्पुण्यं सर्वतीर्थनमस्कृतम् ॥ १४
तथा ह्यष्टादशाध्यायमाहात्म्यं भुवनोत्तरम् । अत्राऽऽख्यानमिदं पुण्यं भक्त्याऽऽकर्णय पार्वति ॥
यदाकर्णनमात्रेण जन्तुः पापैः प्रमुच्यते । अस्ति मेरुगिरेः शृङ्गे पुरी रम्याऽमरावती ॥ १६
पुरा मम विनोदाय निर्मिता विश्वकर्मणा । निरन्तरं गुणयुता कोटिगीर्वाणसेविता ॥ १७
तेजःपुञ्जवती साक्षाद्ब्रह्मविद्येव विश्रुता । चिन्तामणिशिलाबद्धाः प्रासादा यत्र कामदाः ॥ १८
जयन्ति मेरुशिखरं चतुर्मुखपुरावधि । यत्र कल्पद्रुमच्छायासुखासीना पुलोमजा ॥ १९
गृणाति श्यामला गीर्भिर्गीतं गन्धर्वयोषिताम् । यत्राऽऽस्ते स बलारातिर्दम्भोलिदलितायुषाम् ॥
दैत्यानां रक्तकल्लोलैस्तत्र भूः शोणतां गता । पुरातनसुधास्वादं स्मारं स्मारं दिवौकसः ॥ २१
धयन्ति यत्र क्षुत्क्षामाः कलां प्रत्यहमैन्दवीम् । तस्यां कैवल्यकल्पायामासीत्पूर्वं शतक्रतुः ॥ २२
शचीसमन्वितः श्रीमान्गीर्वाणगणसेवितः । स कदाचित्सुखासीनो विष्णुदूतैरधिश्रितम् ॥ २३
सहस्रनेत्रमायान्तमपश्यत्पुरुषं परम् । ततस्तदीयैस्तेजोभिरभिभूतः पुरंदरः ॥ २४
मणिसिंहासनात्तूर्णं पतितः स्थानमण्डपे । सिंहासनात्प्रयातस्य ततस्तस्य हरेर्भटाः ॥ २५
गीर्वाणगणसाम्राज्यपट्टबन्धं वितेनिरे । अथ तस्याभिषिक्तस्य महेन्द्रस्य पुलोमजा ॥ २६
वामाङ्कमारुरोहाऽऽशु दिव्यदुन्दुभिनिःस्वनैः । अथ त्रिदिवसंगीतगीर्वाणप्रमदान्विताः ॥ २७
सुरा नीराजयामासुर्दिव्यै रत्नैः सुरस्त्रियः । ततो वै ऋषयो वेदैराशीर्वादांस्तदा ददुः ॥ २८
रम्भाद्या ननृतुस्तस्य पुरस्तादप्सरोगणाः । गन्धर्वा ललितालापाजगुर्मङ्गलकौतुकम् ॥ २९
एवं नूतनमिन्द्रं त जुष्टं बहुभिरुत्सवैः । विना क्रतुशतं दृष्ट्वा शक्रो विस्मयमाययौ ॥ ३०
न प्रपा विहिता मार्गे तडागा न विनिर्मिताः । नाऽऽरोपिता महावृक्षाः पान्थविश्रान्तिकारकाः

+ इदमर्धं ज. पुस्तके नास्ति । * अयं श्लोकः क. ख. ज. ञ. पुस्तकस्थः ।

१ ख. ञ. °त्तरम् । २ क. ख. ज. ञ. °त्रप्राप्तं र° । ३ क. ख. ज. ञ. °मकारकम् । ४ ख. ज. ञ. चेन्द्रो । ५ ख. ज. चम्पकम् । ६ क. ख. ज. ञ. °लैः स्वर्धुनी शो° ।

न कदाचिदहो दृष्टो देवस्त्रिपुरभैरवः । निधिवासस्थिता देवी पूजिता न मदालसा ॥ ३२
मेघंकरस्थितः शार्ङ्गधरो नैव निरीक्षितः । न कृतं विरजे स्नानं नैव काशीपुरं गतः ॥ ३३
न देववाटिकावासी दृष्टो नरहरिः स्वयम् । एरण्डविष्णुर्हेरम्बो (?) न जातु परिशीलितः ॥ ३४
रेणुका नेक्षिता जातु मातापुरनिवासिनी । [+नागदन्तपुरे ख्यातो नागनाथो न वीक्षितः] ३५
रेवापुरस्थितो देवो घुसृणेशो न वीक्षितः । [*न भक्त्या पूजिता देवी दानापुरनिवासिनी ३६
न भक्त्या त्रिपुरे दृष्टस्त्रिलिङ्गस्त्र्यम्बकः स्वयम् । न शार्दूलतडागस्थो वीक्षितः सोमनाथकः] ३७
आर्णग्रामस्थितो दृष्टो न महानमृतेश्वरः । न तुङ्गभद्रातीरस्थो दृष्टो हरिहरः स्वयम् ॥ ३८
कावेरीकर्णिकातीरे श्रीरङ्गो नैव वीक्षितः । दीनास्त्वनाथाः क्रोशन्तः कारागारान्न मोचिताः ॥
अन्नदानेन दुर्भिक्षे प्राणिनो नैव पूजिताः । रात्रौ रात्रौ कृता क्वापि निर्जले नोदकप्रपा ॥ ४०
न गौतम्यां कृतं स्नानं न दृष्टो हरिणेश्वरः । दत्तं न भूखण्डमपि कन्यया नैव पूजिताः ॥ ४१
न तीर्थेषु कृतं सत्रं न ग्रामेषु कृता मखाः । न पुष्करिण्यो विहिता मार्गमध्ये वहुदकाः ॥ ४२
न प्रासादाः कृताः क्वापि ब्रह्मविष्णुपिनाकिनाम् । न जातुचिद्भयाक्रान्ता रक्षिताः शरणागताः
कथमेतेन पापेन देवदत्तमिहार्जितम् । इति चिन्ताकुलो भूत्वा हरिं प्रष्टुं पुरंदरः ॥ ४३
ययौ सरभसं खिन्नः क्षीराकूपारगह्वरम् । तत्र प्रविश्य गोविन्दं कृतानद्रं स वासवः ॥
अकस्मान्निजसाम्राज्यभ्रंशदुःखमुवाच ह ॥ ४५

इन्द्र उवाच—

रमाकान्त भवत्प्रीत्यै कृतं क्रतुशतं पुरा । तेन पुण्येन संप्राप्तं मया पौरंदरं पदम् ॥ ४६
इदानीं नूतनः कोऽपि जातो दिवि पुरंदरः । न तेन धर्मो विहितो न तेन क्रतवः कृताः ॥
मम सिंहासनं दिव्यं कथमाक्रान्तमच्युत ॥ ४७

श्रीमहादेव उवाच—

इत्येवं वदतस्तस्य श्रुत्वा वाचं रमापतिः । किंचिदुन्मीलिताक्षोऽसावुवाच मधुरं वचः ॥ ४८

श्रीभगवानुवाच—

किं दानैरल्पफलदैः किं तपोभिः किमध्वरैः । वर्तमानः क्षितितले स मां प्रीणितवान्पुरा ॥ ४९

इन्द्र उवाच—

भगवन्कर्मणा केन स त्वां प्रीणितवान्द्विजः । यत्प्रीत्या च भवान्प्रादात्तस्मै पौरंदरं पदम् ॥ ५०

श्रीभगवानुवाच—

जपत्यष्टादशाध्याये गीतानां श्लोकपञ्चकम् । तेन पुण्येन संप्राप्तं तव साम्राज्यमुत्तमम् ॥
[+सर्वपुण्यशिरोरत्नभूतेन त्वं स्थिरो भव] ॥ ५१

श्रीशिव उवाच—

इति विष्णोर्वचः श्रुत्वा ज्ञात्वोपायं पुरंदरः । विप्रवेषधरो भूत्वा गतो गोदावरीतटम् ॥ ५२
तत्रापश्यत्पुरं पुण्यं कालिकाग्राममुत्तमम् । यत्र कालेश्वरो देवो वर्तते कालमर्दनः ॥ ५३

---

+इदमर्धं क. ख. ज. ञ. पुस्तकस्थम् । * धनुश्चिह्नान्तर्गतः पाठः क. ख. ज. ञ. पुस्तकस्थः । + इदमर्धं क. ख. ज. ञ. पुस्तकस्थम् ।

---

१ च. °वः । विन्ध्यवा° । २ झ. ड. स्थान । ३ क. ख. ज. ञ. °तः । एलापु° । ४ च. क्षेत्रेषु ।

तत्र गोदावरीतीरे स्थितं परमधार्मिकम् । अपश्यत्करुणावन्तं ब्राह्मणं वेदपारगम् ॥ ५४
नित्यमष्टादशाध्यायं जपन्तं दान्तचेतसम् । ततस्तच्चरणद्वंद्वे लुठित्वा परया मुदा ॥ ५५
स तमष्टादशाध्यायमपठत्तेन शिक्षितम् । अथ पुण्येन तेनासौ विष्णोः सायुज्यमाययौ ॥ ५६
हित्वा पुरंदरादीनां देवानां पदमल्पकम् । ज्ञात्वाऽतीव मुदा युक्तो वैकुण्ठमगमत्परम् ॥ ५७
अत एवं परं तत्त्वं मुनीनामिदमुत्तमम् । दिव्यमष्टादशाध्यायमाहात्म्यं कथितं मया ॥ ५८
यस्य श्रवणमात्रेण सर्वपापैः प्रमुच्यते । इत्येवं गीतामाहात्म्यं कथितं पापनाशनम् ॥ ५९
पुण्यं पवित्रमायुष्यं स्वर्ग्यं स्वस्त्ययनं महत् । यः शृणोति महाभागे श्रद्धया संयुतः पुमान् ॥
सर्वयज्ञफलं प्राप्य विष्णोः सायुज्यमाप्नुयात् ॥ ६०

इति श्रीमहापुराणे पाद्म उत्तरखण्डे गीतामाहात्म्ये सतीश्वरसंवादेऽष्टादशाध्यायमाहात्म्यवर्णनं नामाष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥ ( १८ )

समाप्तमिदं गीतामाहात्म्यम् ।

आदितः श्लोकानां समष्ट्यङ्काः—४०२०५

---

अथ नवाशीत्यधिकशततमोऽध्यायः ।

---

[*पार्वत्युवाच

देव देव महादेव सर्वज्ञ सकलार्थद । कृपां मयि परां कृत्वा यत्पृच्छे तद्वदस्व मे ॥ १
श्रुतं च गीतामाहात्म्यं महाश्चर्यैककथायुतम् । तेन मे भक्तिरुत्पन्ना श्रोतुं कृष्णकथां पराम् ॥ २
पुराणेषु च सर्वेषु श्रीमद्भागवतं परम् । यत्र प्रतिपदं कृष्णो गीयते बहुधर्षिभिः ॥
तन्माहात्म्यं तथा तत्त्वं सेतिहासं वदाधुना ॥ ३

ईश्वर उवाच—]

यं प्रव्रजन्तमनुपेतमपेतकृत्यं द्वैपायनो विरहकातर आजुहाव ।
पुत्रेति तन्मयतया तरवोऽभिनेदुस्तं सर्वभूतहृदयं मुनिमानतोऽस्मि ॥ ४

नैमिषे सूतमासीनमभिवाद्य महामतिः । कथामृतरसास्वादकुशलः शौनकोऽब्रवीत् ॥ ५

शौनक उवाच—

अज्ञानध्वान्तविध्वंसिकोटिजन्माघनाशनम् । सूताऽऽख्याहि कथासारं मम कर्णरसायनम् ॥ ६
भक्तिज्ञानविरागाप्तो विवेको वर्धते कथम् । मायामोहनिरासश्च वैष्णवैः क्रियते कथम् ॥ ७
इह घोरे कलौ प्रायो जीवश्चासुरतां गतः । क्लेशाक्रान्तस्य तस्यैव शोधने किं परायणम् ॥ ८
श्रेयसां यद्भवेच्छ्रेयः पावनानां च पावनम् । कृष्णप्राप्तिकरं शश्वत्साधनं तद्वदाधुना ॥ ९
चिन्तामणिर्लोकसुखं सुरद्रुः स्वर्गसंपदम् । प्रयच्छति गुरुः प्रीतो वैकुण्ठं योगिदुर्लभम् ॥ १०

सूत उवाच—

प्रीतिः शौनक चित्ते ते ह्यतो वच्मि विचार्य च । सर्वसिद्धान्तनिष्पन्नं संसारभयनाशनम् ॥ ११

* धनुश्चिह्नान्तर्गतः पाठः क. ख. ज. पुस्तकस्थः ।

१ ङ. °टिसूर्यसमप्रभम् । २ ञ. रसायनम् । ३ क. ज. °ष्णप्राप्तिक° । ४ क. ज. प्रीतोऽहं ते द्विजश्रेष्ठ कथयिष्ये यथाश्रुतम् । सारात्सारतरं यच्च स° ।

भक्तिप्रवर्धनं यच्च कृष्णसंतोषहेतुकम् । तदहं तेऽभिधास्यामि सावधानतया शृणु ॥ १२
कालव्यालमुखग्रासत्रासनिर्वासहेतवे । श्रीमद्भागवतं शास्त्रं कलौ कीरेण भाषितम् ॥ १३
एतस्मादपरं किंचिन्मनःशुद्ध्यै न विद्यते । जन्मान्तरे लभेत्पुण्यं तदा भागवतं लभेत् ॥ १४
परीक्षितेः कथां वक्तुं सभायां संस्थिते शुके । सुधाकुम्भं गृहीत्वैव देवास्तत्र समागमन् ॥
शुकं नत्वाऽवदन्सर्वे स्वकार्यकुशलाः सुराः ॥ १५

सुरा ऊचुः—

कथासुधां प्रयच्छस्व गृहीत्वैव सुधामिमाम् । एवं विनिमये जाते सुधा राज्ञा प्रपीयताम् ॥
प्रपास्यामो वयं सर्वे श्रीमद्भागवतामृतम् ॥ १६

सूत उवाच—

क्व कथा क्व सुधा लोके क्व काचः क्व मणिर्महान् । ब्रह्मरातो विचार्येति तदा देवाञ्जहास ह ॥ १७
अभक्तांस्तांश्च विज्ञाय न ददौ स कथामृतम् । श्रीमद्भागवती वार्ता सुराणामपि दुर्लभा ॥ १८
राज्ञो मोक्षं तथा वीक्ष्य पुरा धाताऽतिविस्मितः । सत्यलोके तुलां बद्ध्वाऽतोलयत्साधनान्यजः
लघून्यन्यानि जातानि गौरवेण इदं महत् । तदा ऋषिगणाः सर्वे विस्मयं परमं ययुः ॥ २०
मेनिरे भगवद्रूपं शास्त्रं भागवतं क्षितौ । पठनाच्छ्रवणात्सद्यो वैकुण्ठफलदायकम् ॥ २१
[*वर्षेण श्रवणं तस्य बहुसौख्यप्रदायकम् । मासेन भक्तिरा(का)मस्य लभते(भवति) द्विजसत्तम]
सप्ताहेन श्रुतं चैतत्सर्वथा मुक्तिदायकम् । सनकाद्यैः पुरा प्रोक्तं नारदाय दयापरैः ॥ २३
यद्यपि ब्रह्मसंबन्धाच्छ्रुतमेतत्सुरर्षिणा । सप्ताहश्रवणविधिः कुमारैस्तस्य भाषितः ॥ २४

शौनक उवाच—

[+लोकविग्रहयुक्तस्य नारदस्यास्थिरस्य च । विधिश्रवे कुतः प्रीतिः संयोगः कुत्र तैः सह] २५

सूत उवाच—

अत्र ते कीर्तयिष्यामि भक्तिपूर्णं कथानकम् । शुकेन मम यत्प्रोक्तं रहः शिष्यं विचार्य च ॥ २६
एकदा तु विशालायां चत्वार ऋषयोऽमलाः । सत्सङ्गार्थं समायाता ददृशुस्तत्र नारदम् ॥ २७

श्रीकुमारा ऊचुः—

कथं ब्रह्मन्दीनमुखः कुतश्चिन्तातुरो भवान् । त्वरितं गम्यते कुत्र कुतश्चाऽऽगमनं तव ॥ २८
इदानीं शून्यचित्तोऽसि गतवित्तो यथा जनः । तवेदं मुक्तसङ्गस्य नोचितं वद कारणम् ॥ २९

नारद उवाच—

अहं तु पृथिवीं यातो ज्ञात्वा सर्वोत्तमा इति । [*तीर्थैर्नानाविधैर्युक्तां पुण्यदैः पुण्यरूपिणीम्]॥
पुष्करं च प्रयागं च काशीं गोदावरीं तथा । हरिक्षेत्रं कुरुक्षेत्रं श्रीरङ्गं सेतुबन्धनम् ॥ ३१
एवमादिषु तीर्थेषु भ्रममाण इतस्ततः । नापश्यं कुत्रचिच्छर्म मनःसंतोषकारकम् ॥ ३२
कलिनाऽधर्ममित्रेण धरेयं बाधिताऽधुना । सत्यं नास्ति तपः शौचं दया दानं न विद्यते ॥ ३३

* धनुश्चिह्नान्तर्गतः पाठः क. ज. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः क. ख. च. छ. ज. झ. ञ. ठ. ड. पुस्तकस्थः । * धनुश्चिह्नान्तर्गतः पाठः क. ज. पुस्तकस्थः ।

१ ख. °णु । कलिव्या । २ क. ज. मुख्याल्हादजनकत्राणाभिधायकम् । श्री । ३ ङ. झ. ञ. कृष्णेन । ४ ख. छ. ठ. म. °रोऽधुना । स्य° ।

उदरंभरिणो जीवा वराकाः कूटभाषिणः । मन्दाः सुमन्दमतयो मन्दभाग्या ह्युपद्रुताः ॥ ३४
पाषण्डनिरताः सन्तो विरक्ताः सपरिग्रहाः । तरुणीप्रभुता गेहे श्यालको बुद्धिदायकः ॥ ३५
कन्याया विक्रयो लोभाद्दंपतीनां च कलकलः । [*भ्रष्टाचारादभिन्नश्च स्वेच्छाचारनिदर्शितः]
आश्रमा यवनै रुद्धास्तीर्थानि सरितस्तथा । देवतायतनान्यत्र दुष्टैर्नष्टानि भूरिशः ॥ ३७
न योगी नैव सिद्धो वा न ज्ञानी सत्क्रियो नरः । कलिदावानलेनाद्य साधनं भस्मतां गतम् ॥
अट्टशूला जनपदाः शिवशूला द्विजातयः । कामिन्यः केशशूलिन्यो दृश्यन्ते भुवि सर्वतः ॥ ३९
[+अट्टमन्नमिति प्रोक्तं शूलो विक्रय उच्यते । शिवो वेद इति प्रोक्तः केशो भग इतीरितः] ४०
एवं पश्यन्कलेर्दोषान्पर्यटन्नवनीमहम् । यामुनं तटमापन्नो यत्र लीला हरेरभूत् ॥ ४१
तत्राऽऽश्चर्यं मया दृष्टं श्रूयतां तन्मुनीश्वराः । एका तु तरुणी तत्र निषण्णा खिन्नमानसा ॥ ४२
द्वौ वृद्धौ पतितौ पार्श्वे निःश्वसन्तावचेतनौ । शुश्रूषन्ती प्रबोधन्ती रुदती च तयोः पुरः ॥ ४३
दशदिक्षु निरीक्षन्ती रक्षितारं निजं पुनः । वीज्यमाना शतस्त्रीभिर्बोध्यमाना मुहुर्मुहुः ॥ ४४
दृष्ट्वा दूराद्गतः सोऽहं कौतुकेन तदन्तिकम् । मां दृष्ट्वा चोत्थिता बाला विह्वला चाब्रवीद्वचः ॥४५

बालोवाच—

भो भोः साधो क्षणं तिष्ठ मच्चिन्तामपि नाशय । दर्शनं तव लोकस्य सर्वथाऽघहरं परम् ॥ ४६
बहुधा तव वाक्येन दुःखशान्तिर्भविष्यति । यदा भाग्यं भवेद्भूरि भवतो दर्शनं तदा ॥ ४७

नारद उवाच—

[*एवमुक्तस्तदा चाहं कृपया क्लिश्यमानसः । अपृच्छं तां वरारोहां कौतुकेन समाकुलः] ॥४८
का च त्वं काविमौ चेमा नार्यः काः पद्मलोचनाः । सविस्तरं देवि वद वद दुःखस्य कारणम्
[+इति पृष्टा मया सा तु बाला दुःखितमानसा । सोवाच निखिलं दुःखमात्मनो दुःखकारणम्]

बालोवाच—

अहं भक्तिरिति ख्याता इमौ मे तनयौ मतौ । ज्ञानवैराग्यनामानौ कालयोगेन जर्जरौ ॥ ५१
गङ्गाद्याः सरितश्चेमा मत्सेवार्थं समागताः । तथाऽपि न च मे श्रेयः सेवितायाः सुरैरपि ॥ ५२
इदानीं शृणु मद्वाक्यं सचित्तस्त्वं तपोधन । वार्ता मे वितताऽप्यस्ति तां श्रुत्वा सुखमावह॥५३
उत्पन्ना द्राविडे साऽहं वृद्धिं कर्णाटके गता । क्वचित्क्वचिन्महाराष्ट्रे गुर्जरे जीर्णतां गता ॥ ५४
तत्र घोरकलेर्योगात्पाषण्डैः खण्डिताङ्गका । दुर्बलाऽहं चिरं जाता पुत्राभ्यां सह संमैतम् ॥ ५५
वृन्दावनं पुनः प्राप्य नवीनेव सुरूपिणी । जाताऽहं युवती सम्यक्श्रेष्ठरूपा तु सांप्रतम् ॥ ५६
इमौ तु शयितावत्र सुतौ मे क्लिश्यतः श्रमात् । इदं स्थानं परित्यज्य विदेशं गम्यते मया ॥५७
जरठत्वं समायातौ तेन दुःखेन दुःखिता । साऽहं तु तरुणी कस्मात्सुतौ वृद्धाविमौ कुतः ॥५८
त्रयाणां सहचारित्वाद्वैपरीत्यं कुतः स्थितम् । घटते जरठा माता तरुणौ तनयाविति ॥ ५९
अतः शोचामि चाऽऽत्मानं विस्मयाविष्टमानसा । वद योगनिधे धीमन्कारणं चात्र किं भवेत् ६०

* धनुश्चिह्नान्तर्गतः पाठः क. ज. पुस्तकस्थः । † धनुश्चिह्नान्तर्गतः पाठः ख. छ. ठ. पुस्तकस्थः । * धनुश्चिह्नान्तर्गतः पाठः क. ख. ज. पुस्तकस्थः । + धनुश्चिह्नान्तर्गतः पाठः क. ज. पुस्तकस्थः ।

१ क. ज. महापाखण्डसंश्रयाः । स्त्रीप्रधाना गृहस्थाश्च वर्णिनो व्रतवर्जिताः । वानप्रस्थाः पुरावासा न्यासिनो भोगतत्पराः । क° । २ ङ. झ. ञ. °लिन्यः संभवन्ति कलाविह । ए° । ३ ङ. मन्दताम् । ४ ख. °कप्रेमरू° ।

नारद उवाच—

[*एवं पृष्टस्तया चाहं क्षणं चैव विमृश्य तु । अवोचं भक्तिमाभाष्य क्लिष्टां कालेन भूयसा] ६१
ज्ञानेनाऽऽत्मनि पश्यामि सर्वमेतत्तवानघे । न विषादस्त्वया कार्यो हरिः शान्तिं करिष्यति ६२

सूत उवाच—

क्षणमात्रेण तज्ज्ञात्वा वाक्यमूचे मुनीश्वरः ॥ ६३

नारद उवाच—

शृणुष्वावहिता बाले युगोऽयं दारुणः कलिः । तेन लुप्तः सदाचारो योगमार्गस्तपांसि च ॥६४
जना अघासुरायन्ते शाठ्यदुष्कर्मकारिणः । इह सन्तो विषीदन्ति प्रहृष्यन्ति सदाऽधमाः॥ ६५
धत्ते धैर्यं तु यो धीमान्स धीरः पण्डितोऽथवा । अस्पृश्यानवलोक्येयं शेषभारकरी धरा ॥ ६६
वर्षे वर्षे क्रमाज्जाता मङ्गलं नापि दृश्यते । न त्वामपि सुतैः साकं कोऽपि पश्यति सांप्रतम्॥६७
उपेक्षिताऽनुरागाद्यैर्जर्जरत्वेन संस्थिता । वृन्दावनस्य संयोगात्पुनस्त्वं तरुणी नवा ॥ ६८
धन्यं वृन्दावनं तेन भक्तिर्नृत्यति यत्र च । अत्रेमौ ग्राहकाभावान्न जरामपि मुञ्चतः ॥
किंचिदात्मसुखेनेह प्रसुप्तिर्मन्यते तयोः ॥ ६९

श्रीभक्तिरुवाच—

कथं परीक्षिता राज्ञा स्थापितोऽप्यशुचिः कलिः । प्रवृत्ते तु कलौ सर्वः सारः कुत्र गतो महान्
करुणापरेण हरिणाऽप्यधर्मः कथमीक्ष्यते । इमं मे संशयं छिन्धि त्वद्वाचा सुखिताऽस्म्यहम् ७१

नारद उवाच—

यदि पृष्टस्त्वया बाले प्रेमतः श्रवणं कुरु । सर्वं वक्ष्यामि ते भद्रे कश्मलं ते गमिष्यति ॥ ७२
यदा मुकुन्दो भगवान्क्ष्मां त्यक्त्वा स्वपदं गतः । तद्दिनात्कलिरायातः सर्वसाधनबाधकः ॥७३
दृष्टो दिग्विजये राज्ञा दीनवच्छरणं गतः । न मया मारणीयोऽयं सारङ्ग इव सारभुक् ॥ ७४
यत्फलं नास्ति तपसा न योगेन समाधिना । तत्फलं लभते सम्यक्कलौ केशवकीर्तनात् ॥ ७५
एकाकारं कलिं दृष्ट्वा सारात्सारफलप्रदम् । विष्णुरातः स्थापितवान्कलिजानां सुखाय च ७६
कुकर्माचरणात्सारः सर्वतो निर्गतोऽधुना । पदार्थाः संस्थिता भूमौ बीजहीनास्तुषा यथा ॥७७
विप्रैर्भागवती वार्ता गेहे गेहे जने जने । कारिता धनलोभेन कथासारस्ततो गतः ॥ ७८
अत्युग्रभूरिकर्माणो नास्तिका दाम्भिका जनाः । तेऽपि तिष्ठन्ति तीर्थेषु तीर्थसारस्ततो गतः ७९
कामक्रोधमहालोभतृष्णाव्याकुलचेतसः । तेऽपि तिष्ठन्ति तपसि तपःसारस्ततो गतः ॥ ८०
मनसश्चाजयाल्लोभाद्दम्भात्पाखण्डसंश्रयात् । शास्त्रानभ्यसनाच्चैव ध्यानयोगफलं गतम् ॥ ८१
पण्डितास्तु कलत्रेण रमन्ते महिषा इव । पुत्रोत्पादनदक्षास्तेऽप्यदक्षा मुक्तिसाधने ॥ ८२
न हि वैष्णवता कुत्र संप्रदायपुरःसरम् । एवं प्रलयतां प्राप्तो वस्तुसारः स्थले स्थले ॥ ८३
अयं तु युगधर्मो हि वर्तते कस्य दूषणम् । अतस्तु पुण्डरीकाक्षः स हि ते निकटस्थितः ॥ ८४

* धनुश्चिह्नान्तर्गतः पाठः क. ज. पुस्तकस्थः ।

१ क. ज. °च । सर्वसत्त्वहरो बा° । २ क. ख. ज. °यं दुष्टभाराकुला धरा । ३ च. °क्तिरुत्पत्तिरत्र च । ४ क. ज. °सिलक्ष्यते । ५ क. झ. ञ. °ता कणलो° । ६ क. झ. ञ. रौरवा । ७ क. ज. °क्षः (क्षं) स्मृत्वा सौख्यमवाप्स्यसि । सू° । च. °क्षः स्मरते शं करिष्यति । सू° ।

सूत उवाच—

इति तद्वचनं श्रुत्वा विस्मयं परमं गता । भक्तिरूचे वचो भूयः श्रूयतां तच्च शौनक ॥ ८५

श्रीभक्तिरुवाच—

सुरर्षे त्वं च धन्योऽसि मद्भाग्येन समागतः । साधूनां दर्शनं लोके सर्वसिद्धिकरं परम् ॥ ८६

इहाऽऽनन्दो यथा मे स्यात्तथोपायस्त्वयोच्यताम् । योगेशस्यापि ते ब्रह्मन्नासाध्यं वर्ततेऽधुना ॥

त्यजति जगति मायां यस्य कायाधवस्ते वचनरचनमेकं केवलं चाऽऽकलय्य ।
ध्रुवपदमपि यातो यत्कृपातो ध्रुवोऽयं सकलकुशलपात्रं ब्रह्मपुत्रं नताऽस्मि ॥ ८८

इति श्रीमहापुराणे पाद्म उत्तरखण्डे श्रीभागवतमाहात्म्ये भक्तिनारदसमागमो नाम
नवाशीत्यधिकशततमोऽध्यायः ॥ १८९ ॥ ( १ )

आदितः श्लोकानां समष्ट्यङ्काः—४०२९३

---

अथ नवत्यधिकशततमोऽध्यायः ।

---

[*सूत उवाच—

एवं संप्रार्थितो विप्रास्तया भक्त्याऽतिदीनया । पुनश्चाकथयद्वै तच्छृणुध्वं दयालवः] ॥ १

नारद उवाच—

वृथा खेदायसे बाले अहो चिन्तातुरा कथम् । श्रीकृष्णचरणाम्भोजं स्मर दुःखं गमिष्यति ॥२
द्रौपदी च परित्राता येन कौरवकश्मलात् । पालिता गोपसुन्दर्यः स कृष्णः क्वापि नो गतः॥३
त्वं तु भक्तिः प्रिया तस्य सततं प्राणतोऽधिका । त्वया हूतस्तु भगवान्याति नीचगृहेष्वपि ॥४
सत्यादित्रियुगे बोधवैराग्यौ मुक्तिसाधकौ । कलौ तु केवलं भक्तिर्ब्रह्मसायुज्यकारिणी ॥ ५
इति निश्चित्य चिद्रूपः सद्रूपां त्वां ससर्ज ह । परमानन्दचिन्मूर्तिं सुन्दरीं कृष्णवल्लभाम् ॥ ६
बद्धाञ्जलि त्वया पृष्टः किं करोमीति चैकदा । त्वां तदाऽऽज्ञापयत्कृष्णो मद्भक्तान्पोषयेति च७
अङ्गीकृतं त्वया तद्वै प्रसन्नोऽभूद्धरिस्तदा । मुक्तिं दासीं ददौ तुभ्यं ज्ञानवैराग्यकाविमौ ॥ ८
पोषणं स्वेन रूपेण वैकुण्ठे त्वं करोषि च । भूमौ भक्तविपोषाय च्छायारूपं त्वया कृतम् ॥ ९
मुक्तिं ज्ञानं विरक्तिं च सहकृत्याऽऽगता भुवि । कृतादिद्वापरस्यान्तं(रान्तं वै)महानन्देन संस्थिता
कलौ मुक्तिः क्षयं प्राप्ता पाषण्डामयपीडिता । त्वदाज्ञया गता शीघ्रं वैकुण्ठं पुनरेव सा ॥ ११
स्मृता त्वयाऽपि चात्रैव मुक्तिरायाति याति च । पुत्रीकृत्य त्वयेमौ च पार्श्वे स्वस्यैव रक्षितौ१२
उपेक्षातः कलौ मन्दौ वृद्धौ जातौ सुतौ तव । तथाऽपि चिन्तां मुञ्च त्वमुपायं चिन्तयाम्यहम् ॥
कलिना सदृशः कोऽपि युगो नास्ति वरानने । तस्मिंस्त्वां स्थापयिष्यामि गेहे गेहे जने जने१४
अन्यधर्मांस्तिरस्कृत्य पुरस्कृत्य महोत्सवान् । तदा नाहं हरेर्दासो लोके त्वां न प्रवर्तये ॥ १५
त्वदन्विताश्च ये जीवा भविष्यन्ति कलाविह । पापिनोऽपि गमिष्यन्ति निर्भयाः कृष्णमन्दिरम्॥
येषां चित्ते वसेद्भक्तिः सर्वदा प्रेमरूपिणी । न ते पश्यन्ति कीनाशं स्वप्नेऽप्यमलमूर्तयः ॥ १७
न प्रेतो न पिशाचो वा राक्षसो वाऽसुरोऽपि वा । भक्तियुक्तमनस्कानां स्पर्शनेऽपि प्रभुर्भवेत्१८

---

* धनुश्चिह्नान्तर्गतः पाठः क. ज. पुस्तकस्थः ।

न तपोभिर्न वेदैश्च न ज्ञानेनापि कर्मणा । हरिर्हि साध्यते भक्त्या प्रमाणं तत्र गोपिकाः ॥ १९
नृणां जन्मसहस्रेण भक्तौ प्रीतिर्हि जायते । कलौ भक्तिः कलौ भक्तिर्भक्त्या कृष्णः पुरः स्थितः
भक्तिद्रोहकरा ये च ते सीदन्ति जगत्त्रये । दुर्वासा दुःखमापन्नः पुरा भक्तविनिन्दकः ॥ २१
अलं व्रतैरलं तीर्थैरलं योगैरलं मखैः । अलं ज्ञानकथालापैर्भक्तिरेकैव मुक्तिदा ॥ २२

सूत उवाच—

इति नारदनिर्णीतं स्वमाहात्म्यं निशम्य सा । सर्वाङ्गपुष्टिसंयुक्ता नारदं वाक्यमब्रवीत् ॥ २३

श्रीभक्तिरुवाच—

अहो नारद धन्योऽसि प्रीतिस्ते मयि निश्चला । न कदाचिद्विमुञ्चामि चित्ते स्थास्यामि सर्वदा॥
कृपालुना त्वया साधो मद्बाधा ध्वंसिता क्षणात् । पुत्रयोश्चेतनं नास्ति ततो बोधय बोधय॥२५

सूत उवाच—

तस्या वचः समाकर्ण्य कारुण्यं नारदो गतः । तयोर्बोधनमारेभे कराग्रेण विमर्दयन् ॥ २६
मुखं संयोज्य कर्णान्ते शब्दमुच्चैः समुच्चरन् । ज्ञान प्रबुध्यतां शीघ्रं रे वैराग्य विबुध्यताम् ॥ २७
वेदवेदान्तघोषैश्च गीतापाठैर्मुहुर्मुहुः । बोध्यमानौ तदा तेन कथंचिन्नोत्थितौ बलात् ॥ २८
नेत्रैरनवलोकन्तौ जृम्भन्तौ सालसावुभौ । बकवत्पलितौ प्रायः शुष्ककाष्ठसमाङ्गकौ ॥ २९
क्षुत्क्षामौ तौ निरीक्ष्यैव पुनः स्वापपरायणौ । ऋषिश्चिन्तापरो जातः किं विधेयं मयेति च ३०
अहो निद्रा कथं याति वृद्धत्वं च महत्तरम् । चिन्तयन्निति गोविन्दं स्मारयामास भार्गव ॥ ३१
व्योमवाणी तदैवाभूत्मा ऋषे खिद्यतामिति । उद्यमः सफलस्ते तु भविष्यति न संशयः ॥ ३२
एतदर्थं तु सत्कर्म सुरर्षे त्वं समाचर । तत्ते कर्माभिधास्यन्ति साधवः साधुभूषणाः ॥ ३३
सत्कर्मणि कृते तस्मिन्सनिद्रा वृद्धताऽनयोः । गमिष्यति क्षणाद्भक्तिः सर्वतः प्रसरिष्यति ॥३४
इत्याकाशवचः स्पष्टं तत्सर्वैरपि विश्रुतम् । नारदो विस्मयं लेभे नेदं ज्ञातमिति ब्रुवन् ॥ ३५

नारद उवाच—

अनयाऽऽकाशवाण्याऽपि गोप्यत्वेन निरूपितम् । किं वा तत्साधनं कार्यं येन कार्यं भवेत्तयोः॥
क भविष्यन्ति सन्तस्ते कथं दास्यन्ति साधनम् । मयाऽत्र किं प्रकर्तव्यं यदुक्तं व्योमभाषया३७

सूत उवाच—

तत्र तावथ संस्थाप्य निर्गतो नारदो मुनिः । तीर्थं तीर्थं विनिष्क्रम्यापृच्छन्मार्गे मुनीश्वरान् ३८
वृत्तान्तः श्रूयते सर्वैः किंचिन्निश्चित्य नोच्यते । असाध्यं केचन प्रोचुर्दुर्ज्ञेयमिति चापरे ॥ ३९
मूकीभूतास्तथाऽन्ये तु कियन्तस्तु पलायिनः । हाहाकारो महानासीत्त्रिलोक्यां विस्मयावहः ॥४०
वेदवेदान्तघोषैश्च गीतापाठैर्विबोधितम् । भक्तिज्ञानविरागाणां नोदतिष्ठत्त्रिकं तु यत् ॥ ४१
उपायो नापरोऽस्तीति कर्णे कर्णेऽजपञ्जनाः । योगिना नारदेनापि स्वयं न ज्ञायते तु यत्॥४२
तत्कथं शक्यते वक्तुमितरैरिह मानुषैः । एवमृषिगणैः पृष्टैर्निर्णीयोक्तं दुरासदम् ॥ ४३
ततश्चिन्तातुरः सोऽथ बदरीवनमागतः । तपश्चरामि चात्रेति तदर्थं कृतनिश्चयः ॥ ४४
तावद्ददर्श पुरतः सनकाद्यान्मुनीश्वरान् । कोटिसूर्यसमाभासानुवाच मुनिसत्तम ॥ ४५

नारद उवाच—

इदानीं भूरिभागेण भवद्भिः सङ्गमास्थितः । शीघ्रं कुमारा वदत कृपां कृत्वा ममोपरि ॥ ४६

भवन्तो योगिनः सर्वे बुद्धिमन्तो बहुश्रुताः । पञ्चहायनसंयुक्ताः पूर्वेषामपि पूर्वजाः ॥ ४७
सदा वैकुण्ठनिलया हरिकीर्तनतत्पराः । लीलामृतरसोन्मत्ताः कथामात्रैकजीविनः ॥ ४८
हरेः (रिः)शरणमेवं हि नित्यं येषां मुखे वचः । अतः कालसमादिष्टा जरा युष्मान्न बाधते ४९
येषां भ्रूभङ्गमात्रेण द्वारपालौ हरेः पुरी । भूमौ निपतितौ सद्यो यत्कृपातः परं गतौ ॥ ५०
अहो भाग्यस्य योगेन दर्शनं भवतामिह । अनुग्रहस्तु कर्तव्यो मयि दीने दयापरैः ॥ ५१
अशरीरगिरोक्तं यत्तत्किं साधनमुच्यताम् । अनुष्ठेयं कथं तावत्प्रब्रुवन्तु सविस्तरम् ॥ ५२
भक्तिज्ञानविरागाणां सुखमुत्पद्यते कथम् । स्थापनं सर्ववर्णेषु प्रेमपूर्वप्रयत्नतः ॥ ५३

श्रीसनत्कुमारा ऊचुः—

मा चिन्तां कुरु देवर्षे हर्षं चित्ते समावह । उपायः सुखसाध्योऽत्र वर्ततेऽपूर्व एव हि ॥ ५४
अहो नारद धन्योऽसि विरक्तानां शिरोमणिः । सदा श्रीकृष्णदासानामग्रणीर्योगभास्करः ५५
त्वयि चित्रं न मन्तव्यं भक्त्यर्थमनुवर्तिनि । घटते कृष्णदासस्य भक्तेः स्थापन(क)ता सदा ५६
ऋषिभिर्बहवो लोके पन्थानः प्रकटीकृताः । श्रमसाध्याश्च ते सर्वे प्रायः स्वर्गफलप्रदाः ॥ ५७
वैकुण्ठसाधकः पन्थाः स तु गोप्यो हि वर्तते । तस्योपदेष्टा पुरुषः प्रायो भाग्येन लभ्यते ॥५८
सत्कर्म तव निर्दिष्टं व्योमवाचाऽभवत्पुरा । तदुच्यते शृणुष्वाद्य स्थिरचित्तः प्रसन्नधीः ॥ ५९
द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथाऽपरे । स्वाध्यायज्ञानयज्ञाश्च ते तु कर्मविसूचकाः ॥ ६०
सत्कर्मसूचको नूनं ज्ञानयज्ञः स्मृतो बुधैः । श्रीमद्भागवतालापः स तु गीतः शुकादिभिः ॥ ६१
भक्तिज्ञानविरागाणां तद्घोषेण बलं महत् । व्रजिष्यति द्वयोः कष्टं सुखं भक्तेर्भविष्यति ॥ ६२
प्रलयं हि गमिष्यन्ति श्रीमद्भागवतध्वनौ । कलिदोषा इमे सर्वे सिंहशब्दाद्वृका इव ॥ ६३
ज्ञानवैराग्यसंयुक्ता भक्तिः प्रेमरसावहा । प्रतिगेहं प्रतिजनं ततः क्रीडां करिष्यति ॥ ६४

नारद उवाच—

वेदवेदान्तघोषैश्च गीतापाठैः प्रबोधितम् । भक्तिज्ञानविरागाणां नोदतिष्ठत्त्रिकं तु यत् ॥ ६५
श्रीमद्भागवतालापात्तत्कथं बोधमेष्यति । तत्कथासु च वेदार्थः श्लोके श्लोके पदे पदे ॥ ६६
छिन्दन्तु संशयं ह्येनं भवन्तोऽमोघदर्शनाः । विलम्बो नात्र कर्तव्यः शरणागतवत्सलाः ॥ ६७

[+सूत उवाच—

ततस्ते सनकाद्यास्तु विरक्ता ऊर्ध्वरेतसः । सिद्धाः सनातना विप्रा नारदं प्रोचुरादरात् ] ॥६८

कुमारा ऊचुः—

वेदोपनिषदां साराज्जाता भागवती कथा । अत्युत्तमा ततो भाति पृथग्भूता फलोन्नतिः ॥ ६९
आमूलाग्रं रसस्तिष्ठन्नाम्रे न स्वाद्यते यथा । संभूय स पृथग्भूतः फले विश्वमनोहरः ॥ ७०
यथा दुग्धे स्थितं सर्पिर्न सुस्वादुफलप्रदम् । पृथग्भूतं हि तद्दिव्यं देवानां रसवर्धनम् ॥ ७१
इक्षूणामादिमध्यान्तं शर्करा व्याप्य तिष्ठति । पृथग्भूता च सा मिष्टा तथा भागवती कथा ॥७२
इदं भागवतं नाम पुराणं ब्रह्मसंमितम् । भक्तिज्ञानविरागाणां स्थापनाय प्रकाशितम् ॥ ७३

+ धनुश्चिह्नान्तर्गतः पाठः क. ज. पुस्तकस्थः ।

१ क. ज. °गिना श्रेष्ठा बु° । २ झ. हरे । ३ च. अन्तका° । ४ क. ज. °स । दैत्यौ भूत्वा त्रिजन्मानि पुनस्तत्स्थ.नमास्थितौ । ५ क. ज. °ते विश्वसौख्यदः । अ° । ६ ख. फलप्रदा ।

वेदान्तवेदसुस्नाते गीताया अपि कर्तरि । परितापवति व्यासे मुह्यत्यज्ञानसागरे ॥ ७४
तदा त्वया पुरा प्रोक्तं चतुःश्लोकसमन्वितम् । तदीयश्रवणात्सद्यो निर्बाधो बादरायणः ॥ ७५
तत्र ते विस्मयः केन यतः प्रश्नकरो भवान् । श्रीमद्भागवतं शास्त्रं शोकदुःखविनाशनम् ॥ ७६

नारद उवाच—

यद्दर्शनं च विनिहन्त्यशुभानि सद्यः श्रेयस्तनोति भवदुःखदवार्दितानाम् ।
निःशेषशेषमुखगीतकथैकपानात्प्रेमप्रकाशकृतये शरणं गतोऽस्मि ॥ ७७
भाग्योदयेन बहुजन्मसमार्जितेन सत्सङ्गमेव लभते पुरुषो यदा वै ।
अज्ञानहेतुकृतमोहमहान्धकारनाशं विधाय हि तदोदयते विवेकः ॥ ७८

इति श्रीमहापुराणे पाद्म उत्तरखण्डे श्रीभागवतमाहात्म्ये कुमारनारदसमागमो नाम नवत्यधिकशततमोऽध्यायः ॥ १९० ॥ ( २ )

आदितः श्लोकानां समष्ट्यङ्काः—४०३७१

---

अथैकनवत्यधिकशततमोऽध्यायः ।

---

[*सूत उवाच—

अथ देवर्षिस्तत्रैव कुमारानमुमान्य च । उवाच प्रणतो वाक्यं ज्ञानयज्ञकृतादरः] ॥ १

नारद उवाच—

ज्ञानयज्ञं करिष्यामि शुकशास्त्रकथोज्ज्वलम् । भक्तिज्ञानविरागाणां स्थापनार्थं प्रयत्नतः ॥ २
कुत्र कार्यो मया यज्ञः स्थलं तद्वाच्यतामिह । महिमा शुकशास्त्रस्य वक्तव्यो वेदपारगैः ॥ ३
कियद्भिर्दिवसैः श्राव्या श्रीमद्भागवती कथा । को विधिस्तत्र कर्तव्यो ज्ञानयज्ञविशारदाः ॥ ४

कुमारा ऊचुः—

शृणु नारद वक्ष्यामो विनम्राय विवेकिने । गङ्गाद्वारसमीपे तु [*कामोदाख्यं पुरं महत् ॥ ५
स्वर्णद्याश्चोत्तरं पुण्यं] तटमानन्दनामकम् । नानाऋषिगणैर्जुष्टं देवसिद्धनिषेवितम् ॥ ६
नानातरुलताकीर्णं नवकोमलवालुकम् । रम्यमेकान्तदेशस्थं हेमपद्मसुशोभितम् ॥ ७
यत्समीपस्थजीवानां [*क्षेत्रस्यैव प्रभावतः । मिथः संभिन्नधीचित्तानां] वैरं चेतसि न स्थितम् ८
ज्ञानयज्ञस्त्वया तत्र कर्तव्यो ह्यप्रयत्नतः । अपूर्वा रसरूपा च कथा तत्र भविष्यति ॥ ९
पुरस्थं निर्बलं चैव जराजीर्णकलेवरम् । सुतद्वयं पुरस्कृत्य भक्तिस्तत्राऽऽगमिष्यति ॥ १०
यत्र भागवती वार्ता तत्र भक्त्यादिकं व्रजेत् । कथाशब्दं समाकर्ण्य तत्रिकं तरुणायते ॥ ११

सूत उवाच—

एवमुक्त्वा (क्त्वा) कुमारास्ते नारदेन समं ततः । गङ्गातटं समाजग्मुः कथापानाय सत्वराः॥१२

---

* धनुश्चिह्नान्तर्गताः पाठाः क. ज. पुस्तकस्थाः ।

---

१ ख. °णात्साधो नि° । २ क. ज. °त्वं क्षमं कृष्णानुकर्षणे । ना° । ३ ङ. °व्यो ममेदं वदता कियत् । कु° । झ. म. °व्यो ममेदं वदतामियत् । कु° । ४ क. ज. °क्ष्यामस्तुभ्यं यत्र कथामिमाम् । शृण्वतां पापराशिघ्नीं नृणां पुण्यविवर्धनीम् । ग° । ५ क. ज. °ति । वृन्दावनप्रतोलिस्थं ज° ।

यदा यातास्तटं ते तु तदा कोलाहलोऽप्यभूत् । भूर्लोके देवलोके च ब्रह्मलोके तथैव च ॥ १३
श्रीभागवतपीयूषपानाय रसलम्पटाः । धावन्तोऽप्याययुः सर्वे प्रथमं ये च वैष्णवाः ॥ १४
भृगुर्वसिष्ठश्च्यवनश्च गौतमो मेधातिथिर्देवलदेवरातौ ।
रामस्तथा गाधिसुतश्च शाकलो मृकण्डपुत्रात्री(त्रि)जपिप्पलादः (द्याः) ॥ १५
योगेश्वरौ व्यासपराशरौ च श्रीमाञ्शुको जाजलिजह्नुमुख्याः ।
सर्वेऽप्यमी मुनिगणाः सह पुत्रमित्रस्वस्त्रीभिरराययुरतिप्रणयेन युक्ताः ॥ १६
वेदान्तानि च वेदाश्च मन्त्रास्तन्त्राः समूर्तयः । दशाष्ट च पुराणानि षट्शास्त्राणि तदा ययुः ॥ १७
गङ्गाद्याः सरितस्तत्र पुष्करादिसरांसि च । क्षेत्राणि च दिशः सर्वा दण्डकादिवनानि च ॥ १८
नागादयो ययुस्तत्र देवगन्धर्वकिंनराः । गुरुत्वात्तत्र नायातान्भृगुः संबोध्य चाऽऽनयत् ॥ १९
दीक्षायां नारदेनाथ दत्तमासनमुत्तमम् । कुमारा वन्दिनाः सर्वैर्निषेदुः कृष्णतत्पराः ॥ २०
वैष्णवाश्च विरक्ताश्च न्यासिनो ब्रह्मचारिणः । मुखभागे स्थितास्ते च तदग्रे नारदः स्थितः ॥ २१
एकभागे ऋषिगणास्तथाऽन्यत्र दिवौकसः । वेदोपनिषदोऽन्यत्र तीर्थान्यत्र स्त्रियोऽन्यतः ॥ २२
जयशब्दैर्नमःशब्दैः शङ्खशब्दैस्तथैव च । चूर्णलाजाप्रसूनानां निक्षेपः सुमहानभूत् ॥ २३
विमानानि समारुह्य कियन्तो देवनायकाः । कल्पवृक्षप्रसूनैश्च सर्वे तत्र समाकिरन् ॥ २४

सूत उवाच—

एवं तेष्वेकचित्तेषु श्रीमद्भागवतस्य च । माहात्म्यमूचिरे स्पष्टं नारदाय महात्मने ॥ २५

कुमारा ऊचुः—

अथ ते संप्रवक्ष्यामो माहात्म्यं शुकशास्त्रजम् । यस्य श्रवणमात्रेण मुक्तिः करतले स्थिता ॥ २६
सदा सेव्या सदा सेव्या श्रीमद्भागवती कथा । यस्याः श्रवणमात्रेण मुक्तिरत्नं समाश्रयेत् ॥ २७
ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसंयुतः । परीक्षिच्छुकसंवादं शृणु भागवतं च तत् ॥ २८
तावत्संसारचक्रेऽस्मिन्भ्रमतेऽज्ञानतः पुमान् । यावत्कर्णगता नास्ति शुकशास्त्रकथा क्षणम् ॥ २९
किं श्रुतैर्बहुभिः शास्त्रैः पुराणैश्च भ्रमावहैः । एकं भागवतं शास्त्रं मुक्तिदानेन गर्जति ॥ ३०
कथा भागवतस्यापि नित्यं भवति यद्गृहे । तद्गृहं तीर्थरूपं हि वसतां पापनाशनम् ॥ ३१
अश्वमेधसहस्राणि वाजपेयशतानि च । शुकशास्त्रकथायाश्च कलां नार्हन्ति षोडशीम् ॥ ३२
तावत्पापानि देहेऽस्मिन्निवसन्ति तपोधनाः । यावन्न श्रूयते सम्यक्श्रीमद्भागवतं नरैः ॥ ३३
न गङ्गा न गया काशी पुष्करं न प्रयागकम् । शुकशास्त्रकथायाश्च फलं न(च)समतां नयेत् ॥ ३४
वेदादिर्वेदमाता च पौरुषं सूक्तमेव च । त्रयी भागवतं मन्त्रो द्वादशाक्षर एव च ॥ ३५
द्वादशात्मा प्रयागश्च कालः संवत्सरात्मकः । ब्राह्मणाश्चाग्निहोत्रं च सुरभिर्द्वादशी तिथिः ॥ ३६
तुलसी च वसन्तश्च पुरुषोत्तम एव च । एतेषां तत्त्वतः प्राज्ञैर्न पृथग्भाव इष्यते ॥ ३७
यश्च भागवतं शास्त्रं वाचयेदर्थतोऽनिशम् । जन्मकोटिकृतं पापं नश्यते नात्र संशयः ॥ ३८
श्लोकार्धं श्लोकपादं वा पठेद्भागवतं च यः । नित्यं पुण्यमवाप्नोति राजसूयाश्वमेधयोः ॥ ३९
उक्तं भागवतं नित्यं कृतं च हरिचिन्तनम् । तुलसीपोषणं चैव धेनूनां सेवनं समम् ॥ ४०
अन्तकाले तु येनैव श्रूयते शुकशास्त्रवाक् । प्रीत्या तस्यैव वैकुण्ठं गोविन्दोऽपि प्रयच्छति ॥ ४१

---

१ क. ख. ज. न । हिमाद्यो नगास्त । २ ङ. ज. म. दीक्षिते ना । ३ क. ज. णि राजसूय ।

